आघ्राय चाननमधिस्तनमायताक्ष्याः
सुप्तं तदात्वरतिकेलिभुवा श्रमेण ।
प्राभातिकः पवन एष सरोजगन्धी
प्राबोधयन्मणिगवाक्षसमागतो माम् ॥ ९ ॥

(सविचारम्) तत्र प्राभातिकरतिसमये –

अपराङ्गविलीनचूलिकाना –
मधिरुह्योरुतलं निषेदुषीणाम् ।
अनुभुञ्जत एव सुन्दरीणा
मतिदीर्घं पुरुषायितं युवानः ॥ १० ॥

(स्मृतिनाटितकेन) साधु! सखे! पुष्पसेन! त्वयेदानीं मदुपदिष्टमनुष्ठीयते; [1]यच्चिरनिविष्टां शीलवतीमुत्सृज्य विकस्वरयौवनारम्भां उत्पलमालामुद्वोढुमुद्योगी भवान् । एष खलु पित्रा कथञ्चिद्वाणिज्योपार्जितानामर्थसञ्चयानामनुत्तमो लाभः ।

पश्य –

बिभ्रद्विवाहवेषं सस्पृहमालोक्य तिष्ठतां यूनाम् ।
उद्वोढुमुत्पलाक्षीमुत्पलमालां समुद्युङ्क्ते ॥ ११ ॥

अहो! वेशजननीनामार्जनोपायः; यदमूः –

एनां भवत्कुलवधूमधुना भजेति
बालां वितीर्य धनिने प्रथमं जनाय ।

1. यद्यदचिर.

अपाद्य चैव मलमल्लकमात्रशेष –
मन्यं विलोभयितुमीदृशमारभन्ते ।। १२ ।।

( परिक्रम्यावलोक्य ) सर्वेणापि वेशवाटेन सख्युत्सवस्सम्भाव्यते ।

सम्प्रति –

रम्भास्तम्भैः फलभरनतैरञ्चितद्वाःस्थलीना –
मुच्चैर्बध्वा वलभिशिखरे वैजयन्ती गृहाणाम् ।
एषा वीथी भवति विभवै राजिता पुष्पलाजैः
कल्याणार्थं विदधति नवां कामिनो वेषलक्ष्मीम् ।। १३ ।।

विरचितमिथश्छेकालापो विदग्धसखीजनैः
श्रवणसुभगां गीतिं सम्भावयंश्च मृगीदृशाम् ।
अपि च शमयन्यूनोः प्रेमोद्भवां कलहक्रिया –
महरिदमहं नेष्याम्याज्ञाकरस्समरभूपतेः ।। १४ ।।

अवतरति शनैर्नवातपोऽयं
गृहशिखरेषु [1]करादितोऽत्र भानोः ।
सुरतविमृदितस्सुराङ्गनानां
कुचकलशादिव कुङकुमाङ्गरागः ।। १५ ।।

इतश्चेदानीम् –

मुक्त्वा वेश्म विहङ्गकोटरममी दारैस्समं निर्गता –
स्सौधाग्रे तरुणातपस्पृशि शनैरापीय पारावताः ।

---

1. करा इव.

[1]पद्मानाहितसंस्क्रियान्विदधतस्तुण्डैर्वलत्कन्धरै –
र्दम्पत्योरिव शिक्षितं रतिविधौ [2]हुङ्कारमातन्वते ।। १६ ।।

अयं हि निष्कासनसमयः कामिजनस्य । (अन्यतोऽवलोक्य) हन्त ! तदपि संवृत्तम् ।

[3]सरभसमुपगृह्य प्रेयसीभिर्विमुक्तः
स्तनकलशविमर्दोन्मृष्टकाश्मीरवक्षाः ।
व्रजति विटजनोऽयं वेशसौधावतीर्णो
नवनखपदचिह्नं वीक्ष्य वीक्ष्यांसकूटम् ।। १७ ।।

(परिक्रम्यावलोक्य) कोऽयमिन्दुमतीमन्दिरद्वारे बालातपविन्यस्तोपवीतस्तिष्ठति ? (विभाव्य) एष खलु सौगन्धिको नाम द्विजकुमारः । (उपसृत्य) सखे !

आपिञ्जरीकृतसमस्ततनुं कथञ्चि –
दासादितां स्तनतटादसितायताक्ष्याः ।
सद्यो विनोदयसि किं सवितुर्मयूखै –
स्सौभाग्यकुञ्जरसुवर्णकुथां हरिद्राम् ।। १८ ।।

सखे ! किमात्थ ? स्मराचारपरेणापि किं द्विजाचारः परिपाल्यत इति । (सस्मितम्) कोऽन्यो भवानिव द्विजाचारपरः ?

आदाय पत्नीं [3]गणिकामारब्धसुरताध्वरः ।
असि बिम्बाधरास्वादादग्रणीस्सोमपायिनाम् ।। १९ ।।

---

1. पद्मा. 2. हिङ्कार. 3. मणिका.

किमात्थ ? पित्रा कथञ्चिदुपजनितानि महार्घाणि क्षेत्राणि विक्रीय गणिकाधर्मदारार्थितस्सुरताध्वरेण कामदेवमाराधयन्न-नुवेलं वर्त इति । (विहस्य) एवं कामदेवमाराध[1]यितुं दीक्षितेन त्वया कुलवधूः कथं पत्नीत्वेन गृह्यते ? पश्य –

अविदितकरणा कुलाङ्गनायाः
कथमिव तृप्तिकरी रतिक्रिया ते ।
अधिगतविविधोपचारमुच्चै –
रनुभवतो गणिका[2]रतं गरीयः ॥ २० ॥

तिष्ठ; साधयाम्यहम् । (अन्यतो दृष्टिं निधाय) अये ! वार-(यु)वती केयं ? भवनद्वारवेदिमारूढा ।

[3]अवकीर्य नखाङ्कुरैस्सुगन्धी –
नलिनीलानलकानरालकेशी ।
वितनोति विशेषरम्यमेषा
[4]नहसन्दर्शितचारुबाहुमूला ॥ २१ ॥

सखि ! केशबन्धनव्याजेन [5]यूनां हृदयबन्धनं करोषि ।

अन्तर्निधाय हृदयान्यपि कामुकाना –
मापिञ्जरेण सह चम्पकगर्भकेण ।
बद्धेयमिन्दुमुखि कुन्तलसंहतिस्ते
पुष्णाति मन्मथमयूरकलापलक्ष्मीम् ॥ २२ ॥

किमात्थ ? अवैमि ते चाटुपाटवमिति । अस्तु, किमाप्तो

1. यितमीक्षितेन. 2. तरङ्गरीयः. 3. अवतीर्य नवाङ्कुरैः. 4. नख.
5. युवानं न.

माधवसेनः ? किमात्थ ? अद्य निष्कासितः शयनादवतीर्य गत इति ( सस्मितमालोक्य )

भर्त्रा प्रवालमणिरेष सखि प्रयुक्तः
कन्दर्पतन्त्रनिपुणेन कपोलयोस्ते ।
आभाति किञ्चिदवलम्बितपाटलाग्रः
कल्हारकुड्मल इव श्रवणावतंसः ।। २३ ।।

आस्व । सखि ! उत्सवं सम्भावयितु साधयामि ( परिक्रामितकेन, पुरोऽवलोक्य ) इयमिदनीं लीलावती बलाज्जननीनिष्कासितप्रस्थितस्य मत्सुहृदो मकरन्दस्य मार्गे न्यस्तदृष्टिर्नृत्यन्तमिव पुनः क्रीडाकलापिनमालोकयन्ती वलयितैकबाहुवल्लीवेल्लितद्वारतोरणस्तम्भपीडितस्तनमास्ते । ( विभाव्य ) अचिरभुक्तोज्झितेयं दयितेन ।

अग्रेषु च्छुरिताः श्रमाम्बुकणिकाश्चूर्णालकानाममू –
र्मुक्तामण्डनविभ्रमं विदधति प्रेङ्खोलतां गण्डयोः ।
अङ्गं म्लानमिदं स्तनावधिरतोत्कम्पौ श्रमश्वासत –
स्ताम्बूलारुणिते दृशौ धवलतां धत्ते च बिम्बाधरः ।। २४ ।।

आलि ! मकरन्दस्य कियती महाभाग्यता !
तस्मिन् गते विदूरं
तन्मार्गादियमनापतन्ती ते ।
विहितक्रमोपदेशां
वीचीमद्यापि वितनुते दृष्टिः ।। २५ ।।

किमात्थ ? न किञ्चित्त्वत्सुहृदमालोक्य तिष्ठामि, पुरः-प्रारब्धनृत्तलीले भवनकलापिनि केवलं दृष्टिर्व्या[1]प्रियते इति । (विहस्य) अयं खलु अयस्कारवाटिकायां सूचीविक्रयः; यतो मयि त्वं प्रागल्भ्यं दर्शयसि । अवैमि ते मकरन्दानुरागं मातृभयञ्च । किमात्थ ? अस्ति किमविदितं भावस्येति । मुग्धे ! मातुरेवं मा भैषीः । विरचय [2]विलापसाध्यम् –

न गणयति वचो न चाभिरूप्यं
न च विनयं न च भोक्तृतां नराणाम् ।
[3]कपिकरकुसुमस्रजं विधत्ते
[4]कृपणजनः परकाङ्क्षिणी[5]परत्वम् ॥ २६ ॥

किमत्थ ? मैवं वादीरज्जुका श्रोष्यतीति । (स्वगतम्) नेदमस्यै रोचते वचः यत्स्वयमपि तदधिकारे शनैः स्थास्यति । (प्रकाशम्) अस्तु, पश्येदमाश्चर्यम् –

दृष्ट्वाऽप्यारादीदृशं केशभारं
दत्तोत्साहो हस्ततालैर्मुहुस्ते ।
नृत्यत्येषः स्निग्धकेकश्शिखण्डी
लज्जाशून्यो मण्डलीकृत्य बर्हम् ॥ २७ ॥

अथवैवं मन्ये –

---

I. क्रियते. 2. विलापिसाध्य. 3. कवि. 4. कृपणजनैः
5. परत्वाम्.

आक्षिप्तविद्युदङ्गी –
मलकघनामधरश(क्र)गोपधराम् ।
वर्षर्तुदेवतां त्वां
मन्वानो नूनमुन्मना बर्ही ॥ २८ ॥

साधयामि । हन्त ! चन्द्रवतीदुहितेयं चन्दनलता चन्द्रशालामध्यास्ते । एषा सनाथयति नवयौवनं शरीरलतया । सम्प्रति हि –

वलयमुरसि किञ्चिद्व्याकरोति प्ररूढं
स्तनमुकुलविवृद्धिं भाविनीमानताङ्ग्याः ।
स्फुरति वचसि मुग्धे प्रक्रिया काचिदन्या
शिथिलयति च दृष्टिः प्राक्तुनीं मौनमुद्राम् ॥ २९ ॥

अयमस्याः परिरम्भणकालः

वपुरिदमवलोक्य कोमलन्ते
कुसुमितमङ्कुरितेन यौवनेन ।
[1]कलयति धनुरैक्षवं कराग्रे
भुवनवशीकरणाय पुष्पबाणः ॥ ३० ॥

अये ! चन्द्रवती स्वयं [2]मन्दिरान्निष्पतति । सखि ! दिष्ट्या वर्धसे स्वदुहितुर्यौवनारम्भेण । किमात्थ ? सर्वमपि सख्युः

1. कलयसि. 2. मन्दिरां निष्पतति.

प्रियमिति । कस्सन्देहः ? अपि दुहितुरालिङ्गनपणार्पणे भवती-मारधयति कामिजनः ? किमात्थ ? अद्य चन्दनलतायाः पण-मर्पयितुमवसरं लभन्ते युवान इति । (सहर्षम्) एष खलु भगवतश्शृङ्गारयोनेरङ्गीकारः –

आश्लेषं मृदुमेव वाञ्छति वपुर्वल्ली न गाढोत्तरं
स्वैराघ्रातसहो मुखेन्दुरधरस्पर्शं न सम्मन्यते ।
आन्तः [1]पाणिनिवेशनं विषहते श्रोणिर्न वासच्युतिं
मन्ये मौग्ध्यमिदं तथापि सुदृशः प्रेमावहं कामिनाम् ।। ३१ ।।

किमात्थ ? अन्तर्न प्रविश्यते भावेनेति ।

सखि ! साम्प्रत[2]मुत्पलमालाया दर्पणपरिणयनोत्सवार्थं गम्यते । श्वः समागन्ताऽस्मि । इयमाशीः –

स्तनशालिसुतायास्ते तरङ्गितरतिक्रियम् ।
अस्तु मन्मथसर्वस्वमखण्डितमिदं वयः ।। ३२ ।।

(पदान्तरे स्थित्वा) अये ! मद्बन्धुरिन्द्रसेनः कुन्दलतासौधगतो मोहनगृहवातायनेन मुखं दर्शयन्नालोलनखकिरणचक्रवालेन करकिसलयेन [3]मामाकारयति । (उपसृत्य; सौधारोहणं नाटयित्वा) अये ! प्रणयकलह इव वर्तते यदद्य कुन्दलतेयम् –

पट्टांशुकावृताङ्गी प्रस्तरमुन्मुच्य मानिनी शेते ।
वल्लीव पवनवेगादवनि[4]गतानरुणपल्लवावरणा ।। ३३ ।।

---

1. प्राणि. 2. मुत्सव. 3. मामाकारयन्ति. 4. वातास्तरुणपल्लवावरणाः

कोऽयमपूर्वो मन्युक्रमः?

दण्डं यमाहुरुचितं दयितापराधे
तं किं न वेत्ति चरणोऽयमदक्षिणस्ते ।
जानाति चेदिदमुरःस्थलमस्य कृत्स्नं
मञ्जीरतीक्ष्णमणिकोटिपरिष्कृतं स्यात् ॥ ३४ ॥

उत्थाय किमात्थ? कितवस्य शरीरमपि न स्पृश्यत इति । सखे! [1]कथयैवं किमारब्धम्? किमात्थ? न किञ्चिन्ममोपरि किमप्यागः । क्षिप्रं कुपितवती; सर्वथा न कारणमन्तेरेण कोपः स्यात् । सखि! त्वया किमुदीर्यते? एष पापो मय्यसन्निहितायां मोहनगृहशायिनीं [2]मत्स्वसारं मरकतवतीमलकेषु गृहीत्वा मामिव रहसि समुपाचरदिति । (कर्णौ पिधाय) शान्तं पापम् । (अपवार्य) सखे! त्वया खलु निर्व्यूढो धूर्ताधिकारः, शृणु गाणिकागृहेषु –

अस्तु पुत्री सवित्री वा दासी वा रूपशालिनी ।
अग्रजा वाऽनुजा वा स्यान्मुच्यते किं विटोत्तमैः ॥ ३५ ॥

किमात्थ? अस्यान्तु गृहीतकुन्तलमालिकायां चेटी दृष्टवतीति । (आत्मगतम्) जातः किं अधरालम्बने विभावरीविरामः । (प्रकाशम्) सखि! किमस्य प्रायश्चित्तम्? किमात्थ? अयमद्यप्रभृति मद्भगिनीवल्लभो भूत्वा वर्तिष्यत इति । किमिदं बालिशवदुदीरयसि? एषो नातःपरमनुष्ठीयत इति

1. कयैवं. 2. मत्स्वस्वारं.

शपथपूर्वं त्वमपि परिचर्यामर्हसि । किमात्थ ? इमञ्चार्थमभ्युपेत्य प्रायश्चित्तमपि विधास्यति भाव इति । अस्तु मा वा प्रत्याययितव्या सखी ।

देवस्य शम्बररिपोश्चरणाम्बुजेन
देव्या रतेश्च महता कुचमण्डलेन ।
पूर्णेन्दुना च पवनेन च दक्षिणेन
सख्याः प्रियाय शपथं कुरु मा विचारः ।। ३६ ।।

साधु सखे ! यथोक्तानुष्ठायी प्रियायाः पादवन्दनं करोषि –

यथा वक्षश्श्रेणिग्रथित(नव)बाष्पाम्बुभरिते
दृशौ किञ्चिन्न्यस्ते भवति पुरतः पादपतिते ।
च्युतो मन्ये मन्युः किमपि हृदयादायतदृश –
स्तदुत्थाय स्वैरं रचय [1]परिरम्भं गतभयः ।। ३७ ।।

अये ! मुक्तरोषा प्रियतमपरिष्वङ्गं वहति सखी ।

अविश्रमोऽयं युवयोर्भूयादालिङ्गनोत्सवः ।
न जातु भवतादस्मै द्रोहिणी कलहक्रिया ।। ३८ ।।

गच्छामि । (सौधादवरुह्य) हन्त ! कान्तिमती कुन्दकमास्फाल्य क्रीडति ।

उल्लसद्वलयहस्तया शनै –
रुन्नमन्नमदुदारनेत्रया ।

---

1. परिरम्भागतभयः.

कन्दुकोऽयमनयाऽद्य भिद्यते
किञ्चिदुन्नमितपूर्वकायया ।। ३९ ।।

सखि कान्तिमति !

करपल्लवताडितः पदान्ते
पतितः कान्त इवैष कन्दुकस्ते ।
मुहुरुत्पननं करोति तूर्णं
मुखमाघ्रातुमिवोत्सुको भवत्याः ।। ४० ।।

अद्य परिश्रान्तेव लक्ष्यते; पश्य –

पर्यस्तं भवति स्तनांशुकमिदं श्वासैः श्रमादुज्झितैः
प्रस्विन्ने जघनस्थले मणिमयी विस्रंसते मेखला ।
धम्मिल्लः श्लथतामुपैति निपतत्पुष्पाचितांस[1]स्थलः
[2]पाणिश्चैष बिभर्ति कन्दुकधरो भूम्ना परिम्लानताम् ।।४१।।

कस्योपरि कृतिनः क्रीडापरिश्रमं विनोदयिष्यसि ? किमात्थ ? धूर्त ! परिवृत्य कथय कन्दर्पकोऽन्तरास्ते इति । किमातः तदभ्यन्तरं प्रविश । ( परिक्रम्यावलोक्य ) कास्विदियमरु(ण)कौशेय विरचिता किञ्चिदाकुञ्चितमुखी कर्णान्तविसर्पिणा कटाक्षच्छायातरङ्गेण कुवलयिकपोलरेखा विलासचतुरविन्यासचरणविवलमानमुख(र)मणिनूपुरा मन्मथाधिदेवतेव मदभिमुखमायाति मदिराक्षी । ( विभाव्य ) एषा मधुमतीदुहिता मलयवती ।

---

1. स्थली. 2. स्थाणिश्चैष.

आरब्धसध्वनिदशार्धपरम्पराणा –
मत्यन्तचित्रपरिचुम्बनडम्बराणाम् ।
अस्याः स्मरामि पुरुषायिततार्ण्डवाना –
मालोलमौक्तिकलतालुलितस्तनानाम् ॥ ४२ ॥

सखि ! कुतोऽयमागमः ? अये ! ऽ[1]प्रतिवचनमृच्छति । भवतु; चेटीमस्याः पृच्छामि । किमस्याश्चण्डसेनेन सह कलहस्सञ्जातः ? किमात्थ ? सञ्जात इति । किं निमित्तम् ? किमात्थ ? स मृषैव स्वसुहृदि सुन्दरके व्यभिचारं व्यपदिश्यानुचितभाषी [2]भवनादिमां निरकासयदिति । मुग्धे स्वगृहेऽपि स्थिते भुजङ्गगृहं तदा का गणिका गच्छेत् । किंमूलोऽयं कौलीनावतारः । ( आकाशे लक्ष्यं बध्वा ) रे मूढ ! चण्डसेन ! निर्मर्यादमेवाचरितम् ।

चापं किमद्य शतधा मदनस्य भग्नं
[3]तत्सायकैस्तरुलताः किमु शून्यशाखाः ।
इन्दुः किमन्धतमसेन [4]निरुद्धमार्गो
मन्दानिलः किमु शिलाहतिखण्डितो वा ॥ ४३ ॥

( सनर्मस्मितम् ) सखि ! चण्डसेनसुन्दरयोः कस्मिन्ननुरागस्ते ? स्मयमानमुखि ! किं ब्रवीषि ? मूर्ख ! बलाद्व्यभिचारमारोपयसि । अलं परिहासेन । अस्मद्विहितोऽयमर्थः ।

---

1. प्रतिवचनमिच्छति. 2. भवानिमान्. 3. तद्वायुखै. 4. निरूढ.

छन्नस्सौहृदकञ्चुकेन सततं प्राप्तो भवत्या गृहं
कुर्वन् स्वप्रियवञ्चनामनुकलं विस्रम्भचेष्टाक्रमैः ।
ताम्बूलं कुसुमञ्च तत्प्रणिहितं गृह्णन्नवोढादरो
यातेऽस्मिन् भवतीं शनैरनुभवन्नास्ते स धूर्तस्स्वयम् ॥ ४४ ॥

याहि; सर्वमेव समाहितं करोमि । (पदान्तरे स्थित्वा) अये ! विकत्थनो वृद्धविटो वेशवाटे ।

अहमिव धनदायी को नुवेशाङ्गनाना –
महमिव रतिकेलौ कः पटीयांश्च तासाम् ।
अहमिव च सपत्नान् को नु [1]राद्धेति जल्प –
न्नुपजनयति हासं हन्त ! वृद्धो विटानाम् ॥ ४५ ॥

आः ! जुगुप्सितमेतस्य चरितम् ।

तनुस्स्थूला मौलिः पलितधवलो लम्बजठरो
वलीनद्धं गात्रं विरलदशनञ्चास्य वदनम् ।
दधानो धम्मिल्लं कृतमसितया चामरिकया
पणं दातुं मूढस्तदपि यतते वेशसुहृदाम् ॥ ४६ ॥

किममुना हतेन । (परिक्रम्य) सद्मेदं किल पद्मवत्याः ! (श्रवणमभिनीय) अद्य प्रासादवलभितले प्रारब्धात्मद्यूतलीला प्रियसखीति मे तर्कः । यतः –

---

1. राजेति.

आताम्रपाटलरुचा सविलासमक्षा –
नादाय पाणियुगलेन विलोकयन्त्याः ।
आबद्धकामुकमनःपुलकाङ्कुरोऽय –
माकर्ण्यते कलरवो वलयावलीनाम् ।। ४७ ।।

(गवाक्षविवरेण वीक्ष्य) केन सह ? किमात्थ ? त्वत्सुहृदा वसन्तकेनेति । अस्ति किं पणबन्धः ? त्वत्सुहृदं पृच्छेति । कथ्यताम् ।

[1]अधरशयनमस्माभिर्भोगकाले पणीकृतम् ।
तदेव सख्या विपणीकृतं तु स्वपराजये ।। ४८ ।। इति ।

(सस्मितम्) तर्हि विजयादपि ते पराजयो बहुमन्तव्यः । (निपुणं निरूप्य) साधु रे धूर्त ! तथैव दीप्यते ।

अधुना यदक्षपतनं गृहे गृहे स्खलितादृते निहितचारुवर्गया ।
अनया कथञ्चिदपि जेतुमिष्यते भवता पराजयविधिस्तु मन्यते ।। ४९ ।।

किमात्थ ? भवानिव कोऽन्यो ममज्ज इति । सखे ! (कि)-यन्मात्रमपि पराजितं पञ्चालका (?) इति । तर्हि परिहृत्य सखीमनुभुङ्क्ष्व ।

मध्यः प्रमाददलितो यदि कोमलाङ्ग्या
वल्गत्कुचेन पुरुषायितसम्भ्रमेण ।

---

1. आपरश्यन.

सद्यो [1]निवापसलिलाञ्जलिरेव देयो
देवस्य पुष्पधनुषो भुजविक्रमाय ।। ५० ।।

किमात्थ ? नातिलङ्घ्यते सुहृद्वचनमिति ।

अज्ञातविरहक्लेशमनङ्गद्यूतकारिणोः ।
अस्तु द्यूतविनोदोऽयमन्तरा विश्रमाय वाम् ।। ५१ ।।

(पुरोऽवलोक्य)

अपराङ्गविलम्बिकेशपाशो
विरहक्षामकलेबरः प्रियायाः ।
क्षरदश्रुविलोचनोऽयमास्ते
कलयंश्चित्रपटं करे पुरस्तात् ।। ५२ ।।

अयं हि वेशमातृनिस्स्वीकृतोऽनाथः; (परिक्रम्य) अये ! इत-स्सम्भूय –

द्विगुणीकृतबाहुवेल्लितोरःपरिरब्धात्मविहारताम्रचूडाः ।
उपयान्ति परस्परं भणन्त.पणबन्धत्वरयेव पौरडिम्भाः ।। ५३।।

पुत्रकाः ! विशङ्कटविषमेतरोऽयमुद्देशस्तदत्र मुच्यन्तां द्वन्द्व-युद्धाय चरणायुधाः । किमात्थ ? यदादिशति भाव इति । (सचमत्कारम्) अहो ! महानयं विनोदः ।

पद्भ्यां कृतप्रहृति पक्ष्मलकण्ठकाभ्यां
चञ्चू[2]पुटाग्रशकलीक्रियमाण[3]चूडम् ।

---

1. निवात. 2. पुरा. 3. चूडा.

आस्तीर्णपक्षपुटताडनघोरघोषं
वृत्तं परस्पररणं चरणायुधाभ्याम् ॥ ५४ ॥

हन्त ! (दक्षिणेन वीक्ष्य)

विषाणाग्रक्रीडा[1]विशकलितकालायसदलै –
र्मुखैरीषत्साचीकरणकुटिलैरुद्धूटसटाः ।
गताः पश्चादेत्य प्रसभमिलिता मेषपतयः
प्रहारानन्योन्यं विदधति शिरोभिः पटुरवैः ॥ ५५ ॥

(पदान्तरे स्थित्वा) मरतकनायिकामन्दिरे मञ्जुली गीतध्वनि-राकर्ण्यते । कथं डोलोत्सवो वर्तते ? सखे ! मन्दारक ! कि-मिदं महाभाग्यं ते ? यतः –

अस्यैकान्ता(लयस्था)मभिमुखमधरारक्तवक्त्रारविन्दो
विध्यन्तीं बाहुमध्यं मुहुरमित(तरस्पर्शवद्भ्र्यां) स्तनाभ्याम् ।
आलीहस्तापविद्धां मणिफलकवतीमास्थितो रत्न(डोलां)
सव्रीडं मन्मथेऽपि स्थितवति कलयस्येष सौभाग्यकेतुः ॥ ५६ ॥

किमात्थ ? सर्वमिदं भवद्विलसितम् । सखि ! मरतकना-यिके गायं गायमुत्सवमुपलालय । किमात्थ ? अद्य डोलो-त्सवार्थं मत्सुहृदा कविमिश्रेण गाथाद्वयं ग्रथितं तत्किं गेयमिति । को दोषः; समीचीनं गीतम् ।

---

1. वलित.

स्फुटाश्च वर्णरागाश्च पुष्यन्मधुरमूर्छना:
अपि कण्ठगुणैस्सख्या: कर्णेषु मधु मुञ्चति ॥ ५७ ॥

एवमुपरि दयितोत्सङ्गवर्तिनी बहूनुत्सवाननुभुङ्क्ष्व । साधयामि । (परिक्रामन्, आतपातिशयमभिनीय) अहो! मध्याह्नस्संवृत्त: । सम्प्रति –

[1]सरस्तोये तप्ते विशति शफरी शैवलगुहां
क्वथच्छीथुं [2]पद्मं (त्यजति) सकलत्रो मधुकर: ।
मृगद्वन्द्वं शेते तलभुवि तरोरङ्कणभुव:
शिखण्डी निद्रालु: श्रयति कदलीमण्डपगृहम् ॥ ५८ ॥

किञ्च,

विदध[3]दलकमीषत्स्विन्नगण्डान्तलग्नं
(अभिमुखम)जघन्या मानयन् [4]ग्लानिमक्ष्णो: ।
कुचविधृतमपास्यन्नेष कूर्पासबन्धं
वपुषि (तरणितापो) व्यज्यते सुन्दरीणाम् ॥ ५९ ॥

(पुरोऽवलोक्य ससम्भ्रमम्) अये! जयद्विपोऽयं जलावगाहनाय याति ।

अग्रे ताडितडिण्डिमो भयवशादुन्मुक्तमार्गो जनै –
स्तिर्यग्व्यावृतलोचन: प्रतिपदं कर्णौ दधन्निश्चलौ ।

---

1. रसस्तोये. 2. वर्त्म. 3. दहमीष. 4. म्लालि.

आकर्षन् मधुसौरभेण नगरोद्यानादलीनां कुलं
क्रीडाकुण्डलितं निवेश्य रदनोत्सङ्गे करं धावति ॥ ६० ॥

तदितश्चन्द्रिकागृहद्वारवेदिकामारुह्य तिष्ठामि । (तथा कृत्वा) हन्त! चन्द्रिकामाता आह्वयति; तत्प्रविशामि । (प्रवेशनाटितकेन) किमभ्यङ्गसमयस्सख्याः!

उत्सारितैकमणिकर्णितकर्णपाश –
मुन्नद्धकेशभरमुज्झि(त)भूषणं ते ।
[1]आधौतदन्तमुकुलस्मितपुष्पितोष्ठ –
मभ्यक्तमङ्गमिदमातनुते मुदं नः ॥ ६१ ॥

किमात्थ? अपि भावेनाभ्यङ्गविधिराचरणीयः? नैष तावदस्मादृशां तवैव शोभाकरः स्यादभ्यङ्गः । पश्य –

वरतनु (तनुरेषा) तावकी तीक्ष्णशोभा
विरचितपरिषेका गन्धतैलद्रवेण ।
विलस(दुदकसे)कादार्द्र[2]तामश्नुवाना
विजितसकललोका मान्मथीवासि (धेनुः) ॥ ६२ ॥

सखि! क्व गतो माधव इति । निष्कुटीदीर्घिकायां स्नातुं निष्क्रान्त इति । कथं त्वदृते स्नानविधिरनेन क्रियते?

विन्यस्यान्तःपुलकिनि करं त्वन्नितम्बस्य मूले
मीनत्रासादुपरि पतितां गाढमालिङ्ग्य च त्वाम् ।

---

1. आहोत. 2. कामा.

कृत्वाऽन्योन्यं सरससलिलोत्क्षेपलीलां कराग्रैः
स्नातुं प्राप्ते सखि किमकरोदेष मूढः प्रियस्ते ॥ ६३ ॥

आसने तावदास्व! कथयामीति । (नाट्येनोपविश्य) अद्य निजसुहृदोश्चण्डसेनसुन्दरकयोः परस्परं कलहस्सञ्जातः । [1]अतस्तन्निवारणार्थमतित्वरितोऽभ्यवहृत्य (गच्छामि) तद्युक्तम्; तावुभावपि मित्रे माधवस्य । अपि मलयवतीकृते संरम्भस्संवृत्तः? किमात्थ? अथ किमिति । अतिगाढो विरोधो न केनापि निवार्यते । अस्तु सख्युत्सवाय साधयामि । किमात्थ?

स्नात्वा मया सममिहैव विधाय (भुक्तिं)
ताम्बूलमार्द्रघनसारयुतं गृहीत्वा ।
आदाय पुष्पमनुलेपविधिञ्च कृत्वा
सायं [2]गमिष्यति सखीभवनं सखेति ॥ ६४ ॥

स्वगृहेऽप्युपचारः कथ्यते ।

क्षुधा चेदत्र भवने भोक्तुं किमुपचर्यते ।
इदं खलु निधानं मे ताम्बूलालेपवाससाम् ॥ ६५ ॥

(सादरं समान्तादवलोक्य)

निरन्तराङ्गी निबिडैर्नखव्रणै –
र्निबद्धपुष्पोचित[3]पुष्टकुन्तला ।

---

1. अतस्तस्मिन्निवारणार्थं. 2. गमिष्यसि. 3. पुष्प.

इयं समायाति नवोत्पलेक्षणा
सुवर्णनासाभरणाञ्चितानना ॥ ६६ ॥

नन्वियं सुन्दरीनाम सुलोचनाचेटी ! हञ्जे ! सुन्दरि !

अश्रान्तकु(ट्टनव)शादतिकर्कशोऽय –
मुद्यत्तृतीयकुचकुड्मलविभ्रमस्ते ।
उद्बाधते किणमणिर्हृदये निकाम –
मुत्तेजनोपल इव स्मरसायकानाम् ॥ ६७ ॥

किमात्थ ? कृतं धूर्तालापेनेति । कथं त्वदृते को नाम धूर्तालापविषयः ?

अविचारगृहीतकुन्तलाना –
मनुबन्धं क्रियमाणता(ण्डवानाम्) ।
अहमालि तव स्मरामि कामं
सुरतानां सुलभोपरि स्थितानाम् ॥ ६८ ॥

किमत्थ ? [1]अपेहि (अविश्वसनीयमिदं) एतावन्ति दिनानि स्मरसीति । (दृष्ट्वा पादौ पुनः स्पृष्ट्वा) न विस्मरामि जातु त्वां तावकीञ्च क्रियाम् । किमाचरति सुलोचना ? किं चन्द्रचूडेन स्ववेश्मनि सहाभ्यवहारार्थमादरादाहूता गतेति? तर्हि वयस्य! मदन्वेषणां कुरु । (नेपथ्याभिमुखमवलोक्य) अये ! समुद्वेलकलकलो जनसन्दोहः । तत्र –

---

1. अवेहि.

विविधौषधिबद्धचूलिबन्धो
विधुतासिःफलकं करे दधानः ।
दृढवेल्लितखड्गरज्जुवल्ली –
कृतकक्ष्यानहनः क एष वीरः ॥ ६९ ॥

इदं खलु मलयवतीसौभाग्यव्याकरणम् । साधु रे सुन्दरक ! सर्वत्र प्रथयति भवान् । (अन्यतो विलोक्य) अये ! सोऽपि चण्डसेनः –

उत्खातमेष कलयन्नसिधेनुमग्रे
पाणिं स्वमेव फलकीकृतमादधानः ।
आयाति चन्दनकृतं दधदङ्गराग –
मालम्बमानतुलसीदलवामवक्षाः ॥ ७० ॥

हन्त ! भोः ! समारब्धपूर्वाहङ्कारमनस्थैर्य[1]कथनोद्दीपित-प्रौहैरुभयवर्गैरपि जनैर्विसृज्यमानौ द्वावप्यविलम्बितमासी-ये (?) चित्रम् ।

वेल्लन्तं बहुविध[2]मण्डलप्रचारै –
र्गुप्ताङ्गं परिधृतखड्ग(मेनमारात्) ।
प्राविक्षन्नखरकरस्सपत्नमन्त –
(र्वक्षं) किं स्थितिमधिकृत्य चण्डसेनः ॥ ७१ ॥

[3]अतिभूमिः खलु शौर्यस्य [4]यदसिपाणिं असिधेनुपाणिरधि-

1. कथनो दीपितप्रौहरुभय. 2. मण्डलैः प्रचारैः 3. अमी.
4. यदधिपाणि.

शेते । अहो ! चण्डसेनस्य रोषातिशयः यतो मा मेति [1]वारयत्यपि पार्श्ववर्तिनि जने –

अधिरुह्य भुजान्तरं तरस्वी
रणभूमौ द्विषतो निपातितस्य ।
(व्यलुना)दसिधेनुधारयोच्चै –
र्भ्रुकुटीभीम[2]ममुष्य मौलिमेषः ॥ ७२ ॥

अगाधमजानन् पदं विन्यस्य हतस्सुन्दरकः । अद्यप्रभृति चण्डसेनो निस्सपत्नं निर्विशतु नाम मलयवतीम् । इतो वयम् । कि(मिद)मिदानीमशेषोऽपि वेशवाटकोणे विटजनस्सम्भूय तिष्ठति ? ( विभाव्य ) कलकण्ठस्य व्यवहारो दृश्यते । तदहमपि सभ्यो भवामि । भोस्सुहृदः ! चिरादेष वस्समागमो नन्दयति नः । किं ब्रूथ ? बहोः कालादालोकितो [3]भावस्तदत्र क्षणमात्रमस्माभिस्सहोपविश्य काममञ्जरीकलत्रव्यवहारो निर्णीयतां भावेनेति । ( तथेत्युपविश्य ) कयोरत्र वादिनोरभियोगोत्तरं ब्रूते । किं ब्रूथ ? किन्न पश्यसि ? काममञ्जरीमातरं कालिन्दीं इमञ्च तज्जामातरं कलकण्ठमिति । ( स्वगतम् ) किमद्यापि ? विस्मृतेयं कृतान्तेनेति ।

स्वहस्ते गृह्णीते तरुणनिहितं तत्पणमसौ
पुनः श्वश्रूधर्मानभिनयति लज्जानतमुखी ।

---

1. पारयत्यपि. 2. मनुष्य. 3. भवांस्तदत्र.

स्वयं प्रातर्बाह्याङ्कणमुपगता कुक्कुटरवं
भगन्ती सौधस्थानहह! तरुणान् पातयति च ॥ ७३ ॥

(प्रकाशम्) भद्रे ! कालिन्दि! अनुचितं हि श्वश्रूरिति भवतीमाह्वातुम् । यदद्यापि पणग्रहणोचिते वयसि वर्तते । किमात्थ? तद्भाव एव जानाति (सस्मितम्) समीचीनोऽयमभ्यागमः ।

[1]पलितमाङ्कतरङ्गितमङ्गकं
प्रमुषिताः प्रथमे च नखव्रणाः ।
फलनिपीडितरन्ध्र[2]मधोबिलं
तदपि ताम्यति हन्त पणाशया ॥ ७४ ॥

किमात्थ? रे मूढ! पण्डितम्मन्य! मामद्य करणकौशलमजानानां किमेवं कथयसीति । अस्ति करणकौशलानभिज्ञो जनः । (स्वगतम्) इयं हि –

अक्ष्णोः [3]शीर्यदसान्द्रवारिलवयोर्विन्यस्य कालाञ्जनं
केशानाहितकार्ष्ण्यधूसररुचः प्रापय्य धम्मिल्लताम् ।
चेलाग्रेण च कण्ठसूत्रसुहृदाऽलम्बौ विधाय स्तना –
वादित्सुर्ग्लहमन्वहं गृहबहिर्द्वाःस्था तमःप्रार्थिनी ॥ ७५ ॥

(प्रकाशम्) [4]कोऽयं पत्रिकाकर इति । किमात्थ? एष कितवो

---

1. पलितिलाङ्ग. 2. मलोऽपिलं. 3. शीर्यदस्रान्द्र...वयोर्विन्यस्य.
4. केयं.

द्विजविटः कलकण्ठः कलत्रीकृत्य मद्दुहितरं काममञ्जरीं कतिचिदहानि निरविशत् । अत्र तु पत्रे न्यस्ते गुप्तद्रव्ये किमाख्यजालं घटयतीति । अस्तु पुनरेकवाक्ये निर्णयः । ब्रूहि कलकण्ठ ! किमुत्तरमुपवर्ण्यते ? नेयं मधुन्यस्ता पत्रिकेति । यद्येवं पत्रिकामालोक्य पश्चादस्माभिर्विचारणीयम् । भद्रे ! पत्रिकां देहि । ( नाट्येन गृहीत्वा ) भोस्सुहृदः ! सावधानाश्शृण्वन्तु भवन्तः । किं ब्रूथ ? अवहिता वयम्; वाचयतु भाव इति । ( यथोक्तमनुतिष्ठति ) "स्वस्ति श्रीः समस्तभुवनैकविजयिनो मन्मथस्य विजयिनि शासने काञ्चीपुरवासिन्याः कालिन्दीदुहितुः काममञ्जर्यास्तन्नगरवासी विप्रविटः पत्रमर्पयति – एकहायनमियं कलत्रीभूय स्थास्यति स्थितया च ताम्बूलाङ्गरागपुष्पाभ्यवहारदुकूलादिकं पृथगनुभोक्तव्यम् । मोचनसमये पाणितलपरिमितञ्च द्रविणं परिहि्रयते । वाससी [1]वितीर्य त्यक्ष्यामि । यदि प्रमादाद्व्यभिचारस्तदा भुक्तदत्तशेषमादातव्य" मिति । (अनुवाच्य) सखे कलकण्ठ ! इदानीं मुमुक्षुरसि काममञ्जरीम् । किमात्थ ? मयैव नाध्यवसितम् । यथा ह्यस्या दुष्टजनन्याः कदर्थनाममृष्यमाणेन कदाचिन्मोक्तुमिष्येत इति । अरे मूढ ! इदं द्वन्द्ववनम् ।

अपि यौवनपुष्पितां मुमुक्षु –
र्गणिकां मातृमतीति को नु कामी ।

---

1. विकीर्य.

अपयाति किमन्यपुष्टपोतो

वृतिगुप्तेति विहाय चूतयष्टिम् ।। ७६ ।।

वयस्य! किमन्यत्? अयमत्र राद्धान्तः –

अर्थैराराध्य कालिन्दीमनुभुङ्क्ष्व तदात्मजाम् ।

हिमानीमिव मार्ताण्डः करैरुत्सार्य पद्मिनीम् ।। ७७ ।।

भोस्सुहृदः! कीदृशं युष्मन्मतम्? किं ब्रूथ? नातः परं निर्णी(य)त इति। भद्रे! कालिन्दि! अज्ञातकृतं जामातुरपराधं क्षमस्व। व्रज वेश्म। भद्र! काममञ्जरीं पृच्छेति कथय। भोस्सुहृदः! सायमुत्सवार्थमनङ्गसेनाभवने भवद्भिः सन्निधातव्यम्। अहमपि तत्र गच्छामि। किं ब्रूथ? तथा कुर्मः, साधयतु भाव इति। (पदान्तरमाश्रित्य) अये! बालमित्रं प्रवासोपस्थितम्! (दृष्ट्वा) अयं ब्राह्मणविटश्चन्द्रकेतुः। (आसाद्य) सखे! परिष्वजस्व माम्। (परिष्वङ्गनाटितकेन) [1]त्वयैतावन्तं कालं क्व देशे विहृतम्? किमात्थ? कथयामि क्षणमात्रमत्र स्थीयतां कादम्बरीगृहद्वार इति। (तथा कृत्वा) सखे! वर्णय वैदेशिकवृत्तान्तम्। किमात्थ? इतः काञ्चीपुरतश्चन्द्रवतीमातृभवनेन निशीथ एव निर्गतोऽहं बहूनि पत्तनानि गाहमानः शनैश्शनैरुज्जयिनीं प्राविक्षमिति। सा खलु मोक्षैकभूमिरुज्जयिनी –

बहिस्सौधायन्त्यां सविधनिलयत्र्यम्बक[2]शिर –

(श्शशि)ज्योत्स्नावीचिस्नपितवलभीशेखर[3]भुवि ।

---

1. त्वयैव तावन्तं. 2. शरीर. 3. भवः.

गृहाश्चान्तःक्रीडा[1]कलहलनोरश्छदतटी –
लुठन्मुक्तादामद्युतिधवलिताभ्यन्तरतलाः ॥ ७८ ॥

किमात्थ ? कदाचिदत्र महाकालनाथमभिवन्दितुकामेनेच्छया नातिदूर[2]वर्तिनी प्रसारितमुखस्थितेन मया समदृश्यत तदभ्यर्णे काऽपि वरवर्णिनी ।

शैवालिनी शफरिणी शतपत्रिणी च
कल्लोलिनी कमल[3]कोरकिणी च कुल्या ।
आलीभिरम्बुरुहिणीभिरिवान्विताऽरा –
दासेदुषी [4]द्रुतमपामधिदेवतेव ॥ ७९ ॥ इति ।

( सविस्मितम् ) प्रागेव प्रणामतस्ते कृतप्रसादो महाकालदेवः । किमात्थ ? तामुद्वीक्ष्य मदनशरशकलितमनस्कः स्तम्भित इव निष्पन्दसर्वावयवो मुहूर्तमहमास्थितः । सा च –

भ्रूविलासरचनापुरस्सरं किञ्चिदाकलित[5]चापसज्जितम् ।
मन्मथास्त्रमिव मर्मभेदिनं मय्यपातयदपाङ्गमङ्गना ॥८०॥इति।

ततः किमात्थ ? असौ पुनः (पर)परिग्रहतया मद्दर्शनोपजात-मन्दाक्षा क्षणमवतीर्य सरितमवतस्थे । मयैतदज्ञानेन गत्वा तदभिज्ञाततटद्रुमलताकुञ्जान्तरे स्थितम् । [6]ततः –

सलिल(तिमित)गात्रीं स्रस्तकाञ्चीकलापां
सरसमृदुपटान्तर्दृश्यमानोरुमूलाम् ।

---

1. हलहलनोरच्छद. 2. वर्तिनीं. 3. कोरकिणीसङ्कुला.
4. सुतमसा. 5. पापसञ्चितम्. 6. तदस्तु.

अनिभृतदृशमाराद्वीक्ष्य पर्यन्तकेशी –
मजनि मदनहस्ते वर्तमानं मनो मे ॥ ८१ ॥ इति ।

कस्येदृशं रूपमालोक्य नोत्कण्ठेत चेतः ? किमात्थ ? सा ततस्स्नाता सखीभिर्गन्तुमुपचक्रमे । मया च तदनुसारः कृतः । मध्येमार्गं श्रीमतः कस्यापि द्विजस्य दुहिता लक्ष्मीति नामधेयेत्याकर्णितमिति । ततः । किमात्थ ?

सा विवेश सविलासमात्मनो
वासवेश्म वरवर्णिनी शनैः ।
तद्गृहान्तिकनिवासिनीमहं
काञ्चिदाशु जरतीमुपास्थितः ॥ ८२ ॥ इति ।

साधीयानयं समागमोपायः । किमात्थ ? तन्मुखेन प्रतिदिनमाहूयानुभवनेना[1]कल्यकालमतिष्ठमिति । सखे ! गरीयस्ते भागधेयम् ।

अस्पष्टदर्शितविशेषनितम्बमूल –
मव्यक्तदेशरभसोढनखप्रचारम् ।
अज्ञातशिल्पकरणं सुरतं वधूना –
मन्यत्र किन्नु सुकृतादनुभूयते तत् ॥ ८३ ॥

किमात्थ ? व्रजत्सु चैवं वासरेषु कर्णाकर्णिकया विदितवृत्तान्तेन [2]पित्रा कथञ्चिन्निर्भर्त्सिता निशीथ एव भर्तुरन्तिका-

1. कल्प. 2. चित्रा.

दुत्थाय माणिक्याभरणमादाय मत्सकाशं मत्तकाशिनी समागतवती। अहमपि तदैवानुमोदमानः केनाप्यविदितं निष्क्रम्य कथञ्चिदपि काञ्चीपुरमनयमिति। (सहर्षम्) फलितं देशान्तरदिव्यपादपेन। क्व स्थापितेयम्? इयन्तु कादम्बरीमन्दिरालिन्दवेदितल इति। (विभाव्य)

नाम्ना न केवलं लक्ष्मीः काञ्चीमय्या च सम्पदा।
तां पुमानिव तन्वङ्गीमनुभुङ्क्ष्व चिरादिमाम्॥ ८४॥

अद्य किमनुतिष्ठति कादम्बरी? (अन्तर्विलोक्य) अये! इयमङ्कणपरिसरवर्धितस्य बालसहकारस्य मूले किञ्चिदालोलकुण्डलमणिमरीचिखचितकपोलरेखं मुखमाकम्पयन्ती दक्षिणेतरकुचकलशविन्यस्तालाबुवलयां वल्लकीं कठोरकह्लारदलकोमलैरङ्गुलीपल्लवैः सलीलं वादयन्ती तिष्ठति।

गुणरुचिरकायवल्ली [1]कुचकलशाबुशालिनी [2]ललिता।
अतिमधुरनादसुभगा सुतनुरियं वल्लकी च काऽप्यन्या॥८५॥

अये! वरतनुरियं प्रतिभाति मे —

विन्यस्योरसि तिर्यगञ्चितगुणामास्फालयन्ती शनै —
र्वीणामङ्गुलिपल्लवैरनुकलं पर्याय(त)स्सारितैः।
साचीकृत्य मुखं मनागिव [3]सरं धम्मिल्लमंसस्थले
श्यामा काचन देवतेव ललिता मूले तरोस्तस्थुषी॥ ८६॥

---

1. रुच. 2. ललालिता. 3. रसं.

आस्तामियम् । (अन्यतो विलोक्य) केयमगाढोदग्रकेशभरा कि-ञ्चिदुत्सारितैककनककेसरकर्णिकोदारकर्णपाशा विरचिताधर-वासपल्लवा (किंचिदुच्छ्रूतं) स्तनयुगलं बिभ्रती पदे पदे डोला-यमानप्रालम्बिकाकोटिताडितगुल्फप्रदेशा विलासचतुरविन्या-साभ्यां भुजलताभ्यां (मर्दलं) वादयन्ती काऽपि वरवर्णिनी निर्वर्ण्यते । (विभाव्य) नन्वियं कुसुमवती नाम कुलटा । (उपसृत्य) सुकृतिना त्वया गम्यते । किमात्थ ? अस्ति किं मद-भिसारे विषयो जन इति । नास्त्येव ।

[1]या केवलं व्रजति वृद्धिमुदग्रघातै –
स्तैस्तैः [2]कठोरकरणैस्सुरतेषु यूनाम् ।
तामद्य दुस्सहरयोऽपि नितम्बखर्जू –
मुन्मृष्य को नु भविता प्रणयास्पदं ते ॥ ८७ ॥

अपि कुशलिनी त्वद्वयस्या भोगवती ?

कामशालेव देवेन कल्पिता सर्वकामिनाम् ।
कुर्वती [3]सुभगंमन्यांस्तदग्राहेण व्रीडितान् ॥ ८८ ॥

किमात्थ ? कुशलिनी तु –

अशनैश्च [4]बहूपदंशमान्यै –
रतिमात्रं मधुरैश्च खाद्यवर्गैः ।

---

1. यावेकवलं. 2. कतोर. 3. सुभगंमन्या तदग्राह......पीडिताम्.
4. वभूव पदं शमान्यै.

अधुनाऽपि किमात्मना भजन्ती
तरुणाह्वानविधिं समादधाति ॥ ८९ ॥

भाव ! तदप्रतिहतं भवत्प्रसादेन वर्तत इति । साधयाम्यहम् ।

पुरुषोन्नमितातपत्रषण्डं
पुरतो नर्तन[1]नाद्यमानतूर्यम् ।
किमिदं बकबृन्दमाविरास्ते
मधुकुम्भैर्महिलाकरावनीतैः ॥ ९० ॥

अत्र

अत्यन्ततीक्ष्ण[2]नयनाञ्चितमञ्चितभ्रु
कादम्बरीमदकषायित[3]गण्डरेखम् ।
आलक्ष्यते किमपि [4]यौवतमात्मयोने –
राविष्कृतं कुलमिवायुधदेवतानाम् ॥ ९१ ॥

अतिमात्रमुद्वेला मदविकृतिरासाम् । तथा हि –

पातुं [5]काऽप्यपरं निषेव्य [6]चषकं स्तब्धा तथाऽऽस्ते चिरं
विस्मृत्यात्मविवक्षितं परिजनानेका मुहुः पृच्छति ।
आलिङ्गत्यपरा सखी मदवशादाघ्रातवक्त्राम्बुजा –
मन्या च स्खलिता स्वमेव वसनप्रान्तं समालम्बते ॥ ९२ ॥

( सहासम् )

(इदं स्त्रैणं) [7]कलेनार्तस्वनम् –

---

1. नट्य. 2. नलिना. 3. गन्ध. 4. यौवन. 5. काव्यतरे.
6. झषकं. 7. कलीना.

विलोलसितमूर्धजं विललमानवक्त्राम्बुजं
विलम्बिविपुलस्तनद्वितय[1]ताडयमानोदरम् ।
मदेन वयसाऽपि च द्विगुणितं स्खलद्भिः पदै –
र्व्यपोढविटहाव (दुर्ललितद्रूय)मानं रतेः ॥ ९३ ॥

यदि मामिमा आलोकयेयुस्तच्चिरान्मोक्षं (न दास्य)न्ति ।
अहरपि मुकुलितप्रायम् ।

आवासरान्तमनुभूय कषायगन्ध –
मम्भोजपात्रभरितं मधु पङ्कजिन्या ।
अह्नां पतिः पतति पाटलमण्डलश्री -
रङ्के दिशो मदवशादिव पश्चिमायाः ॥ ९४ ॥

(तत्सर्वतो निर्वर्ण्य) निरस्तं स्थिरमैश्वर्यम् ।

विकासश्रीः पद्मे दिवसमखिलं या स्थितवती
समग्रा सेदानीं कुमुदवनमन्विष्य चलती ।
[2]तमोद्य प्रागद्रेरतिगहनकुञ्जान्तरगतं
निराकर्तुं वेगाद्वन(न)यति सन्ध्यां भगवतीम् ॥ ९५ ॥

अहो ! वासरावसानवृत्तान्तो वेशवाटस्य –

विन्यस्यन्ते प्रदीपाः प्रतिवलभितलं जालरन्ध्राभि[3]लक्ष्याः
सौधाग्रे चन्दनानां [4]पुटकिनि महती गृह्यते तूलशय्या ।

---

1. साह्य. 2. तमद्य. 3. लक्ष्म्याः. 4. पुलकिनि.

यत्किञ्चिच्छद्मपूर्वं पणतरलधियो निर्गता द्वारि नार्यो
दूतीं सम्प्रेक्ष्य दूरे कतिचन धनिनो गूढधूर्ताश्चरन्ति ॥ ९६ ॥

अत्र

अङ्गानि सायमभिषेकविधायिनीना –
मालिङ्गनैः पुलकयन्नगराङ्गनानाम् ।
कम्पानिलोऽयमभिनर्तितवीचिमालः
कामीव सञ्चरति पञ्चशरैकबन्धुः ॥ ९७ ॥

तदयमस्माकमनङ्गमेखलाप्रासादा[1]सादनसमयः । (परिक्रम्याव_लोक्य) हन्त! प्राप्तास्स्मः ।

दधाना विन्यस्ताङ्कुरतरुणदूर्वाङ्कुरमुखौ
पयःपूर्णौ कुम्भावुदितमणिदीपप्रवणभूः ।
व्यनक्ति द्वारे वस्स्वयमहह सख्या गृहमिदं
फलापीडक्लान्ता [2](क)मुकयुगली तोरणधरा ॥ ९८ ॥

(प्रवेशनाटितकेन) उत्सवः परां कोटिमारूढः ।

सर्वत्र महितो लोकः सर्वत्र कुसुमस्रजः ।
सर्वत्र कामसम्बाधः सर्वत्र स्मरडम्बरः ॥ ९९ ॥

अये! सखीजनो मे सन्निहितः । इयं खलु बाल्यादारभ्य मत्प्राणसखी मन्दारलता ।

---

1. साहन. 2. मुखयुगली.

आलोलनेत्रशफरा भुजवीचिरेखा
रोधस्स्थली सुमहता जधनस्थलेन ।
सौन्दर्यवारिभरिता स्तनचक्रवाका
सञ्चारिणी मदनविभ्रमदीर्धिकेव ॥ १०० ॥

नन्वियं मदयन्तिकापुत्रिका मधुकरिका –

वंशीश्यामा वरतनुरियं चन्दनालिप्तगात्री
मुक्ताजालं शिरसि निहितं शोभते धारयन्ती ।
श्वेतीभूता कुसुमरजसा शर्वरीवोपविष्टा
मुग्धज्योत्स्नास्नपितदशनं बिभ्रती बिम्बमिन्दोः ॥ १०१ ॥

असौ खलु मृगाङ्कवती –

विशाले विन्यस्तं मृगमदललामेदमलिके
वहन्ती सीमन्तान्तरनिहितसिन्दूरकणिकाम् ।
वसाना हारिद्रं वसनमिदमाप्ता(र्द्रं)घुसृणा
निराकल्पैरङ्गैरहह नयने नन्दयति नः ॥ १०२ ॥

अये ! कुण्डलकेशी –

विलसति दधती नवाङ्गरागं
विहितमसौ मृगनाभिकर्दमेन ।
तटिदिव तपनीयपिञ्जराङ्गी
तरुणपयोधरकेलिपञ्जरस्था ॥ १०३ ॥

अहो ! शृङ्गारवतीयमात्मानमयथार्थयन्ती –

ग्रीवासूत्रनिवेशितांशुकदशा किञ्चिन्निरीक्ष्यस्तनी
[1]विन्यस्याञ्चितकङ्कणं प्रियसखीस्कन्धे [2]करन्तस्थुषी ।
पश्यन्ती सविलासमन्तिकजुषो बालानपाङ्गैर्निजै –
र्मुग्धं जिघ्रति केलिपद्मसकृत्साचीभवल्लोचना ॥ १०४ ॥

अलमनेन; सख्युत्सवमुपलालयामि सर्वत्र व्यापृतलोचनः ।

क्वचन मदिरामोदः कुत्रापि तन्मुखसौरभं
क्वचिदपि तदालोकोद्योतः क्वचिन्मणिदीपिकाः ।
क्वचिदलिवधूगीतं कुत्रापि तद्रशनारवः
क्वचन सुदृशः [3]क्वापि प्रालम्बचम्पकमालिकाः ॥ १०५ ॥

तावदनङ्गलेखामालोकयामि । (पुरोऽवलोक्य सहर्षम्)

आलोक्य मामियं दूरादव्याजप्रेमनिर्भरा ।
इन्दुं पयोधिवेलेव प्रत्युत्कूजति भामिनी ॥ १०६ ॥

(आसाद्य) सखि ! दिष्टया निष्प्रत्यूहं प्रवर्तते दुहितुरादर्श-परिणयनोत्सवः । किमात्थ ? भाव ! भवन्मूलोऽयमभ्युदय इति । सखि ! किमेवमुदीर्यते ? अत्र वयं खलु फलभोक्तारः ! पश्य –

---

1. बिन्दस्यञ्चित. 2. तर. 3. क्वचन.

आलेपो मधुर: सुगन्धि कुसुमं रत्नोत्तरं भूषणं
ताम्बूलं घनसारखण्ड[1]सहितं क्षौमं मनोहारि च ।
आहारो बहुशो वरांशरुचिरो वित्तं [2]यथापेक्षितं
स्वाधीनं खलु सर्वमालि! विदितं(ते सौहृदं) मादृशाम् ।।१०७।।

किमात्थ ? वधूसहायं त्वत्सुहृदं सभाजयेति । यत्सत्यं पुष्पसेनस्य मत्सौहार्दमुत्पलमालाकरस्पर्श: । ( तदभिमुखो भूत्वा ) अपि कुशलं वधूवराभ्याम् ? सखे ! किमात्थ ? तदानीमेव कुशलं न: यदा त्वयैवं कार्यमुद्दिष्टमिति । ईदृशो मदुपदेश: –

पाणिमुत्पलमालाया: पञ्चबाणो रतेरिव ।
आलम्ब्य साम्प्रतमभूदग्रणी: कामिनां भवान् ।। १०८ ।।

[3]अयि जाते उत्पलमाले [4]त्वयेदं ग्रहीतव्यं । अये ! इयमपि गृहान्ते तवानतमुखी [5]कुसुमिताधरकिसलयमन्दस्मितमुक्ता[6]सरा (तिष्ठति) । सखि ! अनङ्गमेखले ! चिरं निर्व्यूढं शृङ्गाररससाम्राज्यं, अत:परं दुहितरि निक्षिप्य विश्राम्यतु भवतीति । यदियमस्मिन्वयसि जनमोहिनी जाता अस्यां खलु –

भ्रूवल्ली निभृता स्मरागमविधौ वाचंयमे लोचने
वक्ष: केवलरूप(रूप्यथ) कृतच्छाया च रोमावली ।

---

1. रहितं. 2. व्यथा. 3. अविज्ञाते. 4. त्वयैवं गृहीतव्या . 5. कुसुमितौ धुनुकिसलय. 6. रयस.

अव्याख्यः सविलासभङ्गिगमनैर्दूरे नितम्बोद्यमः
स्वप्नेऽपि स्मृतिगोचरो न [1]वचसामुक्तार्जवो(मञ्जि)मा ।१०९।

किमात्थ? विषाधिकः खलु भुजङ्गशिशुरिति। किमुच्यते? (प्राचीमवलोक्य) अये! उदित एष भगवानुमारमणचूडामणी रोहिणीरमणः।

उदयाचलतः खमुज्जिहीते
शशिबिम्बं शरकाण्डपाण्डराभम्।
मुकुरोत्सवदर्शनोत्सुकायाः
मुखमुत्क्षिप्तमिवेन्द्रदिङ्मृगाक्ष्याः ॥ ११० ॥

(चन्द्रातपातिशयमभिनीय)

शिरसि कुसुमापीडः फाले च पद्मललाटिका
भिसतमितरे ज्योत्स्ना(ङ्कूरास्तथा) स्तनकुम्भयोः।
धवलसिचयः श्रोणीभारे [2]स्तनावधि चन्दनं
कुवलयदृशामिन्दोराम्रेडयन्ति मरीचयः ॥ १११ ॥

सखि! किमनङ्गलेखे! किमतः परमनुष्ठीयते? तथापीदमस्तु भरतवाक्यम् —

---

1. वचसामुक्ताजवो. 2. स्तनावपि.

अनितररसाधीनं भूयादनङ्गपदं पदं
हृदयमसकृच्छृङ्गाराद्वैतशृङ्खलितं नृणाम् ।
शशधरकलापीडं श्यामामयं करुणामयं
शमयतु पुनर्जन्मक्लेशं ममापि परं महः ॥ ११२ ॥

**शृङ्गारशेखरं नाम भाणस्समाप्तः ॥**

# ERRATA
## शोधन पत्रम्

| Page | Line | Read | For |
|---|---|---|---|
| ५ | १ | आपाद्य | अपाद्य |
| ६ | १ | पक्षा | पद्मा |
| ६ | ५ | गुह्य | गृह्य |
| ६ | १९ | 4 | 3 |
| ६ | २१ | 3. सरस 4. मणिका | 3. मणिका |
| ७ | १४ | नहसन्दर्शित | नहसन्दशिति |
| ८ | ८ | इयमिदानीं | इयमिदनीं |
| १० | ११ | प्राक्तनीं | प्राक्तुनीं |
| ११ | ५ | आश्लेषं | आश्लोषं |
| ११ | ७ | अन्त: | आन्तः |
| ११ | १९ | गता तरुण | गतानरुण |
| १२ | ८ | कारणमन्तरेण | कारणमन्तेरेण |
| १२ | ११ | समुपाचरतीति | समुपाचरदिति |
| १२ | १३ | गणिका | गाणिका |
| १३ | १६ | कन्दुक | कुन्दक |
| १४ | ६ | मुहुरुत्पतनं | मुहुरुत्पननं |
| २२ | १६ | समन्ता | समान्ता |
| २६ | ७ | पलितभङ्ग | पलितमाङ्ग |
| ३० | १२ | गरीयस्ते | गरोयस्ते |
| ३१ | ८ | (अन्तर्विलोक्य) | (अन्तर्बिलोक्य) |
| ३१ | १३ | कुचकलशालाबु | कुचकलशाबु |
| ३२ | Title | भाण: | भणा: |
| ३९ | १२ | भसित | भितस |

